ॐ

मोक्षसाधनम्

# नव शतनाम स्तोत्रम्

संशोधक— संग्रहकर्त्ता:—

न्याय वेदान्त व्याकरणाध्यापकाचार्य संगीतज्ञ महामंडलेश्वर दार्शनिकाध्यापक स्वामी ज्ञानतीर्थ

( देशराज )

" मूल्यमूल्यम "

## — नम्र निवेदन :—

मुझ भगवद्भक्तो! जो निरन्तर पारमार्थिक कार्य में जीवन समर्पण कर के भगवच्चरण कमलों का निष्कामोपासना करना चाहते हैं वे इन सात स्तोत्रों का पाठ पूजा ध्यान जप करें। इस स्तोत्ररूप पुस्तक में श्री विष्णुशतनाम, रामशतनाम, शिवशतनाम, दुर्गाशतनाम, सूर्यशतनाम, गंगाशत नाम, ॐकारशतनाम, गणपतिसूक्त हैं।

जप करके कल्याण के अधिकारी बन यह नम्र प्रार्थना है।

जगत् कल्याणाभिलाषी:—

श्री माहेश्वरी कुल भूषण सेठ श्री मिश्रीलालजी की आज्ञा से दीर्घजीवी जगदीश के शुभ विवाह में परमात्माप्रीत्यर्थ भेंट किया गया.

खाचरौद, जिला ( उज्जैन )



न्याय-वेदान्त-व्याकरणाचार्य दार्शनिक मंडलेश्वर
ज्ञानतीर्थ स्वामी





## -: श्री विष्णु शतनाम :-

नमाम्यहं हृषीकेशं केशवं मधुसूदनम् ।
सूदनम् सर्वदैत्यानां नारायणमनामयम् ॥
जयन्तं विजयं कृष्णमनन्तं वामनं तथा ।
विष्णुं विश्वेश्वरं पुण्यं विश्वात्मानं सुरार्चितम् ॥
अनघं त्वघहर्तारं नारसिंह श्रियः प्रियम् ।
श्रीपतिं श्रीधरं श्रीदं श्री निवासं महोदयम् ॥
श्री रामं माधवं मोक्षं क्षमारूपं जनार्दनम् ।
सर्वज्ञं सर्वनेतारं सर्वेशं सर्वदायकम् ॥

हरिं मुरारिं गोविन्दं पद्मनाभं प्रजापतिम् ।
आनन्दं ज्ञानसम्पन्नं ज्ञानदं ज्ञानदायकम् ॥
अच्युतम् सबलं चन्द्र वक्त्रं व्याप्त परावरम् ।
योगेश्वरं जगद्योनिं ब्रह्मरूपं महेश्वरम् ॥
मुकुन्दं चापि वैकुण्ठमेक रूपं कविं ध्रुवम् ।
वासुदेवं महादेवं ब्रह्मण्यं ब्राह्मण प्रियम् ॥
गोप्रियम् गोहितं यज्ञं यज्ञाङ्गं यज्ञवर्धनम् ।
यज्ञस्यापि भोक्तारं वेद वेदाङ्ग पारगम् ॥
वेदज्ञं वेदरूपं तं विद्यावासं सुरेश्वरम् ।
प्रत्यक्षं च महाहंसं शंखपाणिं पुरातनम् ॥
पुष्करं पुष्कराक्षं च वाराहं धरणीं धरम् ।
प्रद्युम्नं कामपालं च व्यास ध्यातं महेश्वरम् ॥
सर्वं सौख्यं महासौख्यं सांख्यं च पुरुषोत्तमं ।
योगरूपं महाज्ञानं योगीशमजितप्रियम् ॥

क्र
२७८

असुरारिं लोकनाथं पद्महस्तं गदाधरम् ।
गुहावासं सर्ववासं पुण्यवासं महाजनम् ॥
वृन्दानाथं बृहत्कायं पावनं पापनाशनम् ।
गोपी नाथं गोपसखं गोपालं गणाश्रयम् ॥
परात्मानं पराधीशं कापिलं कार्य मानुषम् ।
नमामि निखिलं नित्यं मनोवाक्काय कर्मभिः ॥
नाम्नां शतेनापितु पुण्य कर्त्ता ।
यः स्तौति कृष्णं मनसास्थिरेण ॥
सो याति लोकं मधुसूदनस्य ।
विहाय दोषानिह पुण्य भूतः ॥
नाम्नां शतं महा पुण्यं सर्व पातक शोधनम्
अनन्य मनसा ध्यायेज्जपेद्ध्यान समाश्रितः
नित्यमेव नरः पुण्यं गंगा स्नान फलं लभेत्
तस्मात्तु सुस्थिरो भूत्वा समाहितमनसा जपेत्

# महात्म्यम्

नास्ति विष्णोः परं धाम नास्ति विष्णोः परं तपः।
नास्ति विष्णोः परोधर्मो नास्ति मंत्रोह्यवैष्णवः ॥
नास्ति विष्णोः परं सत्यं नास्ति विष्णोः परो मखः।
नास्ति विष्णोः परं ध्यानं नास्ति विष्णोः परागति ॥
सर्व तीर्थमयो विष्णुः सर्व शास्त्रमयः प्रभुः।
सर्वक्रतुमयो विष्णुः सत्यं सत्यं वदाम्यहम् ॥
कृष्ण कृष्ण कृष्णेति यो मां स्मरति नित्यशः।
जलं भित्वा यथा पद्मं नरकादुद्धराम्यहम् ॥
कृष्ण कृष्णेति कृष्णेति इतिवा यो जपन् पठन्।
इमं लोकं परित्यज्य मोदते विष्णु सन्निधौ ॥
कृष्ण कृष्णेति कृष्णेति कलौ वक्ष्यति प्रत्यहम्।
नित्यं यज्ञायुतम् पुण्यं तीर्थ कोटि समुद्भवम् ॥

कृष्ण कृष्णेति कृष्णेति नित्यं जपति यो जनः।
तस्य प्रीतिः कलौ नित्यं कृष्णस्योपरिवर्धते ॥
कृष्ण कृष्णेति कृष्णेति नित्यं जाग्रत स्वपंश्च यः।
कीर्तयेत तु कलौ चैत्र कृष्ण रूपी भवेद्धि सः ॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्धयात्मनामा प्रकृतेः
स्वभावात्। करोमि यद्यत सकलं परस्मै नारायणा-
येति समर्पयामि ॥

## " श्रीराम शतनाम "

ॐ श्री रामो रामचन्द्रश्च रामभद्रश्च शाश्वत।
राजीब लोचनः श्रीमान् राजेन्द्रो रघुपुंगवः ॥
जानकी वल्लभो जैत्रः जित मित्रो जनार्दनः।

विश्वामित्रः प्रियो दान्तः शरण त्राण तत्परः ॥
वालि प्रमथनो वाग्मी सत्यवाक् विक्रमः ।
सत्य व्रतो व्रत फलः सदा हनुमदाश्रयः ॥
कौशल्य खरध्वंसि विराध वध पण्डितः ।
विभीषण परित्राता दशग्रीव शिरोहरः ॥
सप्त ताल प्रभेता च हरकोदण्डखण्डनः ।
जामदग्न्य महादर्पदलनस्ताडकान्तकृत् ॥
वेदान्त पारो वेदात्मा भवबन्धनैक भेषजः ।
दूषण त्रिशिरोऽरिश्च त्रिमूर्त्ति त्रिगुणस्त्रयी ॥
त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्र कीर्तनः ।
त्रिलोक रक्षको धन्वी दण्डकारण्य वासकृत् ॥
अहल्या पावनश्चैव पितृभक्तो वरप्रदः ।
जितेन्द्रियो जित क्रोधो जित लोभो जगद्गुरुः ॥
ऋक्षवानर संघाती चित्रकूट समाश्रयः ।

जयन्त त्राण वरदः सुमित्रा पुत्र सेवितः ॥
सर्वदेवाधिदेवश्च मृतवानर—जीवनः ।
माया मारीच हन्ता च महाभागो महाभुजः ॥
सर्व देव स्तुतः सौम्यो ब्रह्मण्यो मुनिसत्तमः ।
महायोगी महोदारः सुग्रीव स्थिर राज्यदः ॥
सर्वपुण्याधिक फलः स्मृतः सर्वाघनाशन ।
आदि पुरुषो महापुरुषः परमपुरुषस्तथा ॥
पुण्योदयो महासारः पुराण पुरुषोत्तमः ।
स्मित वक्त्रो मित भाषी पूर्व भाषी च राघवः ॥
अनन्तगुण गम्भीरो धीरोदात्त गुणोत्तरः ।
माया मानुष चारित्रो महादेवाभिपूजितः ॥
सेतुकृज्जितवारीशः सर्वतीर्थमयोहरिः ।
श्यामाङ्गः सुन्दरः शूरः पीतवासा धनुर्धरः ॥
सर्वयज्ञाधिपो यज्ञो जरामरण वर्जितः ।

शिवालिङ्ग प्रतिष्ठाता सर्वाघगणवर्जितः ॥
परमात्मा परं ब्रह्म सच्चिदानन्द विग्रहः ।
परं ज्योति परं धाम पराकाशः परात्परः ॥
परेशः पारगः पारः सर्वभूतात्मकः शिवः ।
इति श्री रामचन्द्रस्य नाम्नामष्टोत्तर शतम् ॥
गुह्याद्गुह्यतरं देवि तव स्नेहात् प्रकीर्तितम्

## " राम महिमा "

यातना यमलोकेषु तावदेव भवेन्नृणाम्
यावन्न भजते भक्त्या रामनाम परात्परम्
तावत्तिष्ठन्ति पापानि देहेषु देहिनां वर
राम रामेति यावद्वै न स्मरन्ति सुखप्रदम्
राम नाम प्रभावेण मुच्यते सर्व बन्धनात्
तस्मात्त्वमपि दैत्येश तस्यैव शरणं व्रज

मृत्यु काले द्विजश्रेष्ठ रामेति नाम यः स्मरेत्
स पापात्मापि मोक्षमाप्नोति जैमिने ॥
रामेति नाम त्रिमर्षे यास्मिन्न स्मर्यते क्षणे
क्षणः स एव व्यर्थः स्यात् सत्यमेतन्येमयोच्यते
राम नामामृत स्वादभेदज्ञा रसना च या
तन्नाम रसनेत्याहु मुनयस्तत्त्वदर्शिनः

ॐ

# श्री शिव शतनाम

नमो रुद्राय नीलाय भीमाय परमात्मने
कपर्दिने सुरेशाय व्योमकेशाय वै नमः ॥
वृषभध्वजाय सोमाय सोमनाथाय शंभवे ॥
दिगम्बराय भर्गाय उमाकान्ताय वै नमः

तपोमयाय भव्याय शिव श्रेष्ठाय विष्णवे ॥
व्यालप्रियाय व्यालाय व्यालानां पतये नमः
महीधराय व्याघ्राय पशूनां पतये नमः ॥
पुरान्तकाय सिंहाय शार्दूलाय मखाय च
मीनाय मीननाथाय सिद्धाय परमेष्ठिने ॥
कामान्तकाय बुद्धाय बुद्धिनां पतये नमः
कपोताय विशिष्टाय शिष्टाय सकलात्मने ॥
वेदाय वेदबीजाय वेद गुह्याय वै नमः
दीर्घाय दीर्घरूपाय दीर्घार्थायाविनाशिने ॥
नमो जगत्प्रतिष्ठाय व्योमरूपाय वै नमः
गजासुर महाकालायान्धकासुर भेदिने ॥
नील लोहितशुक्लाय चण्डमुण्ड प्रियाय च
भक्ति प्रियाय देवाय ज्ञात्रे ज्ञानाव्ययाय च ॥
महेशाय नमस्तुभ्यं महादेवाय हराय च

त्रिनेत्राय त्रिवेदाय वेदाङ्गाय नमो नमः ॥
अर्थाय चार्थरूपाय परमार्थाय वै नमः
विश्व भूपाय विश्वाय विश्वनाथाय वै नमः ॥
शंकराय च कालाय कालावयवरूपिणे
अरूपाय निरूपाय सूक्ष्म सूक्ष्माय वै नमः ॥
श्मशानवासिने भूयो नमस्ते कृति वासिने
शशांक शेखरायेशायोग्रभूमि शयाय च ॥
दुर्गाय दुर्गपाराय दुर्गावयव साक्षिणे
लिङ्गरूपायालिङ्गाय लिंगानांपतये नमः ॥
नमः प्रलयरूपाय प्रणवार्थाय वै नमः
नमो नमः कारणकारणाय मृत्युञ्जयायात्म भव रुपिणे
श्रीत्र्यम्बकायासित कण्ठ शर्वगौरी पतयेसकल-
मंगलहेतवे नमः

शिवोगुरुः शिवोदेवः शिवो वन्धुः शरीरिणाम्

शिव आत्मा शिवो जीवः शिवादन्यन्न किञ्चन
सा जिह्वा या शिवं स्तौति तन्मनो ध्यायते शिवम्
तौ कर्णौ तत्कथालोलौ तौ हस्तौ तस्य पूजकौ
ते नेत्रे पश्यतः पूजां तच्छिरः प्रणतं शिवे
तौ पदौ यौ शिव क्षेत्रं भक्त्या पर्यटतः सदा
यस्येन्द्रियाणि सर्वाणि वर्तन्ते शिवकर्मसु
स निस्तरति संसारं भुक्तिं मुक्तिं च विन्दति
शिव भक्ति युतो भृत्यश्चाण्डालः पुल्कस सोऽपिच
नारी नरो वा षण्ढो वा सद्यो मुच्येत संसृतेः
इत्येषा वाङ्मयी पूजा श्रीमच्छंकर पादयोः
अर्पिता तेन देवेशः प्रीयतां श्री सदाशिवः



ॐ

# श्री सूर्य शतनाम

ॐ सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रवि ।
गभस्तिमानजः कालो मृत्यु र्धाता प्रभाकरः ॥
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥
इन्द्रो विवस्वान्दीप्तांशुः शचिः सौरिः शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्चस्कन्दो वैश्रवणो यमः ॥
वैद्युतो जाठरश्चाग्नि रैन्धनस्तेजसां पतिः ।
धर्म ध्वजो वेद कर्ता वेदाङ्गो वेद वाहनः ॥
कृत त्रेता द्वापरश्च कलिः सर्वामराश्रयः ।
कलाकाष्टा मुहूर्तश्च चपा यामास्तथा चणः ॥

संवत्सरकरोऽश्वत्थ कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्त सनातनः ॥
कालाध्यक्षः प्रजाध्यक्षो विश्वकर्त्ता तमोनुदः ।
वरुणः सागरोऽन्शुश्च जीमूतो जीवनोऽरिहा ॥
भूताश्रयो भूतपतिः सर्वलोक नमस्कृतः ।
स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ॥
अनन्तः कपिलो भानु कामदः सर्वतो मुखः ।
जय विशालो वरदः सर्वभूतः निषेवितः ॥
मनः सुपर्णो भूतादि शीघ्रगः प्राण धारणः ।
धन्वंतरि धूमकेतुरादि देवोऽदितेः सुतः ॥
द्वादशात्मा रविदक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वार त्रिविष्टपम् ॥
देह कर्त्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेय करुणान्वितः ॥

सूर्यशतकं पठेन्नित्यं ग्रहपीडा प्रणाशनम् ।
अपुत्रोलभते पुत्रं दरिद्रो धनवान् भवेत् ॥
आमिषं मधुपानं च यःकरोति रवेर्दिने ।
सप्तजन्म भवेद्रोगी जन्मजन्मदारिद्रता ॥
स्त्री तैल मधुमांसानि यस्त्यजेत्तु रवेर्दिने ।
न व्याधिशोक दारिद्र्यं सूर्यलोकं स गच्छति ॥



ॐ

# श्री गंगा शतनाम

विष्णु पाद प्रसूतासि वैष्णवी विष्णु देवता ॥
त्राहि नस्त्वमघादस्माद् जन्ममरणान्तिकात्
ॐ नमः शिवायै गंगायै शिवदायै नमो नमः ॥

नमस्ते विष्णु रूपिण्यै ब्रह्म मूर्त्यै नमोऽस्तु ते
नमस्ते रूद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ॥
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये
संसार विषनाशिन्यै जीवनायै नमोऽस्तु ते ॥
तापत्रितयसंहन्त्र्यै प्राणेश्यै ते नमो नमः
सर्वस्य सर्व व्यापिनां भिषक्‍श्लोष्ट्यै नमोऽस्तु ते ॥
स्थास्नु जंगम सम्भूतविषहन्त्र्यै नमोऽस्तु ते
शान्तिसंतानकारिण्यै नमस्ते शुद्धमूर्त्तये ॥
सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्त्तये
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ॥
भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ॥
नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः
नमास्त्रि शुक्ल संस्थायै क्षमावत्यै नमो नमः ॥

त्रिहुताशन संस्थायै तेजोवत्यै नमो नमः
नन्दायै लिङ्गधारिण्यै सुधाधारात्मने नमः ॥
नमस्ते त्रिम्बमुख्यायै रेवत्यै ते नमो नमः
बृहत्यैतेनमस्तेऽस्तु लोक धात्र्यै नमोऽस्तुते ॥
नमस्ते विश्वामित्रायै नन्दिन्यै ते नमो नमः
पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ॥
परावर शताढ्यायै तारायै ते नमो नमः
पाशजालनिकृन्तिन्यै अभिन्नायै नमोऽस्तुते ॥
शान्तायै च वरिष्ठायै वरदायै नमो नमः
उग्रायै सुखजन्यै च संजीवन्यै नमोऽस्तुते ॥
ब्राह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः
प्रणतार्ति प्रमार्ज्जन्यै जगन्मात्रे नमोऽस्तुते ॥
सर्वापत्प्रतिपक्षायै मंगलायै नमो नमः
शरणागत दीनार्त परित्राण परायणे ॥

सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तुते
निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ॥
परा पर परायै च गंगे निर्वाण दायिनि
गंगा ममाग्रतो भूयात्गंग मे तिष्ठ पृष्ठतः ॥
गंगे मे पार्श्वयो रधि गंगे त्वय्यस्तु मे स्थिति
आदौ त्वमन्त मध्ये च सर्वस्त्वं गंगस्ते शिवे ॥
त्वमेवमूल प्रकृतिस्त्वं पुमान् पर एव हि
गंगेत्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥

## महात्म्यम्

न कार्तिक समो मासो न कृते समं युगम् ॥
न वेद समं शास्त्रं न तीर्थं गंगाया समम्
जाह्नवी वृद्धा गंगा च कालिन्दी च सरस्वती ॥
कावेरी नर्मदावेणी सप्त गंगा प्रकीर्तितः
यह स्तोत्र जिसके घर में लिखा रहता है

अग्नि चोर-सर्प नहि आते ॥ जेष्ठ मास के शुक्ल पक्ष में हस्त नक्षत्र अष्ठमी में बुधवार हो तो गंगा जल में खड़े हो कर गंगा शतनाम दश बार पढ़े लक्ष्मी प्राप्त होगी ॥



ॐ

# श्री दुर्गा शतनाम

शतनाम प्रवक्षामि श्रृणुष्व कमलानने ।
यस्य प्रसाद मात्रेण दुर्गा प्रीता भवेत् सती ॥
ॐ सती साध्वी भव प्रीता भवानी भव मोचिनी ।
आर्या दुर्गा ज्या चादयात्रिनेत्रा शूलधारिणी ॥
पिनाक धारिणी हस्ता चन्द्रघन्टा महातपा ।
मनो बुद्धि रहंकारा चित्तरूपा चिताचिती ॥
सर्व मंत्रमयी सत्ता सत्या नन्द स्वरूपिणी ।

अनन्ता भवानी भाव्या भव्या भव्या सदा मति ।
साम्वीसुदेव माता च चिता रत्न प्रिया सदा ।
सर्व विद्या दक्ष कन्या दक्ष यज्ञ विनाशिनी ॥
अपर्णा नेक वर्णा च पाटला पाटलावती ।
पटाम्बर परिधाना कमल मंजरी रंजिनी ॥
अमेया विक्रमा क्रूरा सुन्दरी सुर सुन्दरी ।
वन दर्गा च मातंगी मतंगमुनिपूजिता ॥
ब्राह्मी माहेश्वरी चैन्द्री कौमारी शिखी वाहना ।
चामुण्डा चैव वाराही लक्ष्मी च पुरुषाकृति ॥
विमलोत्कर्षिणी ज्ञाना क्रिया नित्या च बुद्धिदा ।
बहुला बहुलप्रेमा सर्ववाहनवाहना ॥
निशंभ शंभ हननी महीषासुर मर्दिनी ।
मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी ॥
सर्वासुर विनाशा च सर्वदानव घातिनी ।

सर्वं शास्त्रमयी सत्या सर्वास्त्रधारिणी तथा ॥
अनेक शस्त्रहस्ता च अनेकास्त्रस्यधारिणी ।
कुमारी चैककन्या च किशोरी युवतीवति ॥
अप्रौढ़ा चैव प्रौढा वृद्धा माता बल मदा ।
महोदरी मुक्तकेशी गौररूपामहाबला ॥
अग्नि ज्वाला रौद्र मुखी कालरात्रि तपस्विनी ।
नारायणी भद्र काली विष्णु मायाजलोदरी ॥
शिवदूती कराली च अनन्ता परमेश्वरी ।
कात्यायनी च सावित्री प्रत्यक्षा ब्रह्म वादिनी ॥
य इदं प्रपठेन्नित्यं दुर्गानाम शताष्टकम् ।
नासाध्यं विद्यते देवी त्रिषुलोकेषु पार्वती ॥

## *महात्म्यम्*

धन धान्यकं सुतं जायां हयं हस्तिमेवच ॥
चतुर्वर्गं तथा चान्ते लभे मुक्तिं च शाश्वतम् ।

। कुमारिं पूजयित्वातु ध्यात्वादेवीं सुरेश्वरीं ।।
पूजयेत परया भक्त्या पठन्नामशताष्टकम् ।
तस्य सिद्धि भवेत्देवी सर्वसुरवरैरपि ।।
राजानो दासतां यान्ति राज्याश्रियमवाप्नुयात् ।
"गौरोचना लक्त कुंकुम सिंदूर कर्पूर मधुत्रयेण विलिख्य यंत्र पूजयेत्"



ॐ

## श्री ॐकार शतनाम्

ॐ कारायनमः ॐ ज्योतिस्वरूपाय नम ।
ॐ उपनिषद् सर्वरूपाय नमः ।।
ॐ पंचकोशप्रकाशायनमः।
ॐ ब्रह्मस्तुत्याय नमः ।।
ॐ साम गायनयोग्याय नमः ।।

फ
२९८

ॐ ध्यानावस्थित मनसा पश्याय नमः ॥
ॐ सुरगणाः यं न विदुस्तस्मै नमः ।
ॐ यं न विदुः असुर गणा तस्मै नमः ॥
ॐ यस्यांतं न विदुः ब्रह्मादया तस्मै नमः ।
ॐ बुद्धियोग दात्रे नमः ।
ॐ द्वन्द्वरहिताय नमः ॥
ॐ मोह कलिल निवारकाय नमः ।
ॐ सप्त ऋषि सर्जनसमर्थाय नमः ॥
ॐ चत्वारो मनवाकर्त्रे नमः ।
ॐ परंधाम रूपाय नमः ॥
ॐ वृहत्साम वाच्याय नमः ।
ॐ गायत्रीछंदस्तुत्याय नमः ॥
ॐ तेजस्विनां तेजोरूपाय नमः ।
ॐ बलवतां बलरूपाय नमः ॥

ॐ जय शालिनां जयरूपाय नमः ।
ॐ यद्देकांशे स्थितो जगत्तस्मैनमः ॥
ॐ येनद्यौरुग्रातस्मै नमः ।
ॐ येन पृथ्वी च दृढा तस्मै नमः ॥
ॐ येन नाकः स्थितःतस्मै नमः ।
ॐ अन्तरिक्षे रजसो विमानाय नमः ॥
ॐ यस्यात्परतरं नास्तितस्मै नमः ।
,, यस्मिन्नभ ओतं प्रोतं च तस्मै नमः ॥
,, यं सुकृतिनो गायन्ति तस्मै नमः ।
,, अर्थार्थिनो यं गायन्ति तस्मै नमः ॥
,, जिज्ञासु जना यं गायन्ति तस्मै नमः ।
,, आर्त जना यं गायन्ति तस्मै नमः ॥
,, ज्ञानि जना यं गायन्ति तस्मै नमः ।
,, निर्द्वन्द्व मोहा यं गायन्ति तस्मै नमः ॥

,, दृढव्रता यं भजंते तस्मै नमः ।
,, यतयो यं भजंते तस्मै नमः ॥
,, भीषायस्मात्पवते वातः तस्मै नमः ।
,, भीषयतः उदेति सूर्यस्तस्मै नमः ॥
,, भीषयतः वर्षति चन्द्रस तस्मै नमः ।
,, भीषायतो अग्निर्दहति तस्मै नमः ॥
,, भीषायतः चंद्रः सायं वर्षति तस्मै नमः ।
,, भीषायस्मात्पृथ्वी भारं बहति तस्मै नमः ॥
,, भीषायतः मृत्युर्धावति तस्मै नमः ।
,, भीषायस्मात् आपः जनयति तस्मै नमः ॥
,, भीषाअग्नि गर्भं पचति तस्मै नमः ।
ॐ भीषायस्मात् वायुरंवं करोति तस्मै नमः ॥
,, भीषायस्मात् भूतानां गर्भं मित्रभावा तस्मै नमः
,, अचिंत्यरूपाय नमः ॥

,, तमसः परस्तात्तस्मै नमः ।
,, यं ब्रह्म विदो वदन्ति तस्मै नमः ॥
,, यद्यतयो विशंति तस्मै नमः ।
,, यदिच्छन्तो ब्रह्मचर्यं चरन्ति तस्मै नमः ॥
,, मनो निरूद्धा आप्नोति स्मरणात् तस्मै नमः ।
,, अनन्य भक्तिलभ्याय तस्मै नमः ॥
,, यद् विदित्वा वेदाध्ययनफलमाप्नोति तस्मै नमः
,, यद्विदित्वा यज्ञफल माप्नोति तस्मै नमः ॥
,, यद्विदित्वातपसः फलमाप्नोति तस्मै नमः ।
,, यद्विदित्वा दानफलमाप्नोति तस्मै नमः ॥
,, यद्विदित्वा ब्रह्मचर्यफलमाप्नोति तस्मै नमः ।
,, यद्विदित्वा योगफलमाप्नोति तस्मै नमः ॥
,, यद्विदित्वा जपफलमाप्नोति तस्मै नमः ।
,, यं विदित्वातिमृत्युमेति तस्मै नमः ॥

,, ॐ इति सामानि गायन्ति तस्मै नमः ।
,, ॐ इति शास्त्राणि शंसान्ति तस्मै नमः ॥
,, ॐ इति अध्वर्युं प्रति गदान्ति तस्मै नमः ।
,, ऋतं पिबंतौ इति वाच्याय नमः ॥
,, गुहा प्रविष्टौ इति प्रतिपाद्याय तस्मै नमः ।
,, स्वप्रकाशो ब्रह्मविदो वदन्ति तस्मै नमः ॥
,, यः सेतु पारं जगमिषो तस्मै नमः ।
,, सर्व भूत हिते रतानां वराय नमः ॥
,, अध्यात्मज्ञानदायिने नमः ।
,, तत्त्वज्ञानाभिदर्शनाय नमः ॥
,, सर्वतः पाणिपादतत्तस्मै नमः ।
,, सर्वतोऽक्षिशिरो मुखाय नमः ॥
,, सर्वतः श्रुतिमल्लोकाय नमः ।
,, यत् सर्वमावृत्य तिष्ठति तस्मै नमः ॥

,, यो लोकत्रयमाविश्य बिभर्ति तस्मै नमः।
,, तुरासंज्ञिकाय नमः॥
,, बहिरंतश्च भूतानाम् तस्मै नमः।
,, सूक्ष्मत्वादविज्ञेयं तस्मै नमः॥
,, सर्वस्य हृदि तिष्ठिताय नमः।
,, निर्गुण भोक्तृ च तस्मै नमः॥
,, ज्ञानयोगव्यवस्थितिदायिने नमः।
,, नैनं पश्यन्ति अचेतसः तस्मै नमः।
,, द्वौ भूत सर्गौ कर्त्रे नमः॥ॐ ब्रह्ममन्त्रप्रियायनमः
ॐ सतां गतिरूपायनमः ॐ भवरोगीनां भेषज रूपाय नमः। ॐ स्तव प्रियाय नमः॥ ॐ स्तुतियोग्याय नमः। ॐ मंगलानां मंगलाय नमः॥ ॐ छंदांसि यस्य पर्णानि तस्मै नमः। ॐ यतः प्रवृतिः प्रसृतः तस्मै नमः॥ ॐ सर्वस्वनाम्ने नमः।

ॐ सविश्वायु तस्मै नमः ।। ॐ सविश्व छाया तस्मै नमः । ॐ यद् भूत्वा न पुनर्भवंति तस्मै नमः ।। ॐ अशेषज्ञेयाय नमः । ॐ अणोरणीयसे तस्मै नमः ।। ॐ वेदान्तवेद्याय नमः । ॐ तारकाय नमः ।। ॐ पतितपावनाय नमः । ॐ गायत्री वल्लभाय नमः ।। ॐ तीर्थस्वरूपाय नमः। ॐ अणिमादिगुणेशाय नमः ।। ॐ साधकानां सिद्धि दायिने नमः । ॐ ब्रह्मविद्ब्रह्मैव भवति तस्मै नमः ।।

"ध्यानम्"

ॐ कारं निगमैक वेद्यमनिशं वेदान्ततत्त्वास्पदं
चोत्पत्ति स्थिति नाश हेतुममलं विश्वस्यविश्वात्मकम्
विश्वत्राण परायणं श्रुतिशतैः संप्रोच्यमानं प्रभुं
सत्यं ज्ञानमनन्त मूर्त्तिममलं शुद्धात्मकं तं भजे

## ॥ अथ गणेशाथर्वशीर्षम् ॥

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि ॥ त्वमेव केवलं कर्त्तासि । त्वमेवकेवलं धर्त्तासि ॥ त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि ॥ त्वं साक्षादात्मासि नित्यम् । सत्यं वच्मि ॥ अवत्वं माम । अव वक्तारम् ॥ अव श्रोतारम् । अव दातारम् ॥ अव धातारम् । अवानूचानमवशिष्यम् ॥ अव पश्चात्तात् । अव पुरस्तात् ॥ अवोत्तरात्तात् । अव दक्षिणात्तात् ॥ अव चोर्ध्वात्तात् । अवाधरात्तात् ॥ सर्वतो माम् पाहि पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः ॥ त्वमानन्दमयस्त्वंब्रह्ममयः । त्वं सच्चिदानन्दा

द्वितीयोऽसि ॥ त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति ॥ सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति त्वं भूमिरापोऽनलोऽनिलो नभः ॥ त्वं चत्वारि वाक् पदानि त्वं गुणत्रयातीतः। त्वंदेहत्रयातीतः त्वं कालत्रयातीतः ॥ त्वमवस्थात्रयातीतः। त्वं मूलाधार स्थितोऽसिनित्यम् ॥ त्वं शक्ति त्रयात्मकः त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्र स्त्वमग्निस्त्वं वायुस्त्वं सूर्य स्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भवः स्वरोम् ॥ गणादीन्पूर्व मुच्चार्य वर्णादीस्तंदनन्तरम्। अनुस्वार परतरः ॥ अर्धेन्दुलसितम्। तारेण रुध्दम् ॥ एतत्तवमनुस्वरूपम्। गकारः पूर्वम् ॥

अकारो मध्यमरूपम् ॥ अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूप ॥ नाद: सन्धानम् सँहिता सन्धि: । सैषा गणेश विद्या ॥ गणक ऋषि: । निचृद्गायत्री छन्द: गणपति र्देवता ॥ ॐ गं गणपतये नम: । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि तन्नोदन्ती प्रचोदयात् ॥ एकदन्तं चतुर्हस्तं पाशमंकुश धारिणम् । रदञ्च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्त गन्धानुलिप्ताङ्ग रक्त पुष्पै: सुपूजितम् ॥ भक्तानु कम्पितं देवं जगत्कारणमच्युतम् । आविर्भूतञ्च सृष्ट्यादौ प्रकृते: पुरुषात् परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वर: ॥ नमो व्रातपतये नमो गणपतये नम: प्रथमपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्री-

श्री वरदमूर्त्तये नमः। एतदथर्व शीर्षयोऽधीते ॥
स ब्रह्मभूयाय कल्पते। स सर्वविघ्नै र्न बाध्यते ॥
स सर्वतः सुखमेधते। स पञ्चमहा पापात्प्रमुच्यते ॥
सायमधीयानो दिवसकृतं पापं नाशयति। प्रात-
रधीयानो रात्रिकृतं पापं नाशयति ॥ सायम्प्रातः
प्रयुञ्जानोऽपापो भवति। सर्वत्राधीयानोऽपविघ्नो
भवति ॥ धर्मार्थकामं मोक्षं च विन्दति इदमथर्व-
शीर्षमाशिष्याय न देयम् यो यद्दिमोहाद्दास्यति ॥
स पापीयान भवति। सहस्रावर्त्तनाद्यं यं कामम
धीते ॥ तं तमनेनसाधयेत्। अनेन गणपतिमभि-
षिञ्चति ॥ स वाग्मी भवति। चतुर्थ्यामनश्न-
ञ्जपति स विद्यावान् भवति ॥ इत्यथर्वण वाक्यम्।
ब्रह्माद्यावरणम् विद्यान्न बिभेति कदाचनेति
यो दुर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति ॥ यो

लाजैर्यजति स यशोवान् भवति । स मेधावान् भव-
ति ॥ यो मोदक सहस्रेण यजति स वाञ्छितफलमा-
वाप्नोति । य साज्य समिद्भिर्यजति स सर्वं लभते
स सर्वं लभते ॥ अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा
सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमा-
सन्निधौ वा जप्त्वा सिद्ध मन्त्रो भवति । महा
विघ्नात् प्रमुच्यते । महा दोषात् प्रमुच्यते ॥ महा
प्रत्यवायात् प्रमुच्यते स सर्वविद्भवति स एवं
वेद । इत्युपनिषद् ॥ ॐ शांतिः शांतिः शांति ॥

---

# श्री कृष्णाष्टोत्तर शतनाम

( गणेशायनमः ) श्री कृष्णः कमलानाथो वासुदेवः
सनातनः । वासुदेवात्मजः पुण्यो लीला मानुष वि-
ग्रहः श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।

चतुर्भुजात्त चक्रासि गदा शङ्ख द्युदायुधः ॥ देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः । यमुना वेग संहारी बलभद्र प्रियानुजः ॥ पूतना जीवितहरः शकटासुर भंजनः । नन्द व्रजानन्दी सच्चिदानन्द विग्रहः ॥ नवनीतनवाहारी मुचुकुंद प्रसादकः । षोडशस्त्रीसहस्रेशस्त्रिभंगो मधुराकृतिः ॥ शुक वागमृताब्धीन्दु गोविन्दो गोविदांपतिः । वत्स पालन संचारी धेनुकासुर भंजनः ॥ तृणीकृत तृणावर्तो यमलार्जुन भंजनः । उत्ताल तालभेत्ता च तमाल श्यामलाकृतिः ॥ गोपगोपीश्वरो योगी सूर्यकोटि समप्रभः । इलापतिः परंज्योतिर्यादवेन्द्रोयदूद्वहः वनमाली पीतवासाः पारिजातापहारकः ॥ गोवर्द्धनाचलोद्धर्त्ता गोपालः सर्वपालकः अजो निरंजः कामजनकः कंजलो

घनः । मधुहा मथुरानाथो द्वारकानायको बली वृन्दावनान्तसंचारी तुलसीदाम भूषणः ॥ स्यमन्तकमणेर्हर्त्ता नरनारायणात्मकः । कुब्जाकृष्णांबरधरो मायी परमपूरुषः मुष्टिकासुरचाणूर महायुद्ध विशारदः ॥ संसार वैरी कंसारिर्मुरारिर्नर कान्तकः ॥ अनादि ब्रह्मचारी च कृष्णा व्यसन कर्षकः । शिशुपालशिरश्छेत्ता दुर्योधनकुलांत कृत् ॥ विदुरा क्रूरवरदो विश्वरूप प्रदर्शकः । सत्यवाक् सत्यसंकल्पः सत्यभामारतो जयी ॥ सुभद्रापूर्वजो विष्णु भीष्ममुक्तिप्रदायकः । जगद्गुरु जगन्नाथो वेणुवाद्य विशारदः ॥ वृषभासुर विध्वंसी बाणासुर बलान्तकृत् । युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ पार्थ सारथिरव्यक्तो गीतामृतमहोदधिः । कालीय फणिमाणिक्यरंजि-

तश्री पदांबुजः ॥ दामोदरो यज्ञभोक्ता दानवेन्द्र विनाशकः । नारायण परब्रह्म पन्नगाशनवाहनः ॥ जलक्रीड़ासमासक्तगोपीवस्त्रापहारकः । पुण्य श्लोकस्तीर्थ करो वेदवेद्यो दयानिधिः ॥ सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः । इत्येवं कृष्ण-देवस्य नाम्नामष्टोत्तरं शतम् ॥ कृष्णेन कृष्ण भक्तेन श्रुत्वा गीतामृतं पुरा । स्तोत्रं कृष्ण प्रिय करं कृतं तस्मान्मया पुरा ॥ कृष्ण नामामृतं नाम परमानन्द दायकम् । अनुपद्रवंदुःखघ्नं परमायुष्य वर्धनम् ॥ दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि । पठतां शृण्वतां चैव कोटि कोटि गुणं भवेत् ॥ पुत्र प्रद-मपुत्राणामगतीनां गतिप्रदम् । धनावहं दरि-द्राणां जयेच्छूनां जयावहम् ॥ शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् । वातग्रह ज्वरादीनां शमनं

शांतिमुक्तिदम् ।। समस्तकामदं मद्य: कोटि जन्मा-
घ नाशनम् । अन्ते कृष्णस्मरणभिदं । भवताप
भयापहम् ।। कृष्णाय यादवेन्द्राय ज्ञानमुद्राय-
योगिने । नाथाय रुक्मिणीशाय नमो वेदान्त-
वेदिने ।। इमं मंत्रं महादेव जपन्नेव दिवानिशम् ।
सर्वग्रहानुग्रह भाक् सर्व प्रिय तमो भवेत् ।। पुत्र
पौत्रै: परिवृत: सर्व सिद्धि समृद्धिमान् । निर्विश्य
भोगान्तेऽपि कृष्णसायुज्यमाप्नुयात् ।।



# श्री विष्णुशतनाम

"श्री गणेशायनम:" ॐ वासुदेवं हृषीकेशं वामनं
जलशायिनम् ।। जनार्दनं हरिं कृष्णं श्री वक्ष
गरुड़ ध्वजम् । वाराहं पुण्डरीकाक्षं नृसिंहं नर-

कान्तकम् ॥ अव्यक्तं शाश्वतं विष्णुमनंतमजम-
व्ययम् । नारायणं गदाध्यक्षं गोविन्दं कीर्तिभा-
जनम् ॥ गोवर्द्धनोध्दरं देवं भूधरं भुवनेश्वरं । वेत्तारं
यज्ञ पुरुषं यज्ञेशं यज्ञवाहकम् ॥ चक्रपाणिं गदा-
पाणिं शंख पाणिं नरोत्तमम् । वैकुण्ठं दुष्टदमनं
भूगर्भं पीतवाससम् ॥ त्रिविक्रमं त्रिकालज्ञं त्रिमूर्तिं
नंदकेश्वरम् ॥ रामं रामं हयग्रीवं भीमं रौद्रं भवो-
द्भवं ॥ श्रीपतिं श्रीधरं श्रीशं मंगलं मंगलायुधम् ।
दामोदरं दमोपेतं केशवं केशि सूदनम् ॥ वरेण्यं
वरदं विष्णुमानन्दं वसुदेवजम् । हिरण्यरेतसं
दीप्तं पुराणं पुरूषोत्तमम् ॥ सकलं निष्कलं शुद्धं
निर्गुणं गुणशाश्वतम् । हिरण्य तनु संकाशं सूर्या-
युतसमप्रभम् ॥ मेघश्यामम् चतुर्बाहुं कुशलं
कमलेक्षणम् । ज्योतीरूपमरूपं च स्वरूपं रूप

संस्थितम् ॥ सर्वज्ञं सर्वरूपस्थं सर्वेशं सर्वतोमुखम् । ज्ञानं कूटस्थमचलं ज्ञानदं परमं प्रभुम् ॥ योगीशं योगनिष्णातं योगिनं योगरूपिणम् । ईश्वरं सर्व भूतानां वंदे भूतमयं प्रभुम् ॥ इति नामशतं दिव्यं वैष्णवं खलु पापहम् । व्यासेन कथितं पूर्वं सर्व पापप्रणाशनम् ॥ यः पठेत् प्रातरुत्थाय स भवे-द्वैष्णवो नरः । सर्वपाप विशुद्धात्मा विष्णुसायु-ज्यमाप्नुयात् ॥ चांद्रायण सहस्राणि कन्यादान-शतानि च गवां लक्षसहस्राणि मुक्तिभागी भवेन्नरः । अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः ॥



